श्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः ।
प्रियं भोजेषु यज्वस्विदं म उदितं कृधि ॥२॥
यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।
एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ॥३॥
श्रद्धां देवा यजमाना वायुगोपा उपासते ।
श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु ॥४॥
श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि ।
श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥५॥

८५ [ द्वादशोऽनुवाकः ॥ सू० १५२-१९१ ]

॥ १५२ ॥ ऋषिः—१-५ शासो भारद्वाजः ॥ देवता—इन्द्रः ॥ छन्दः—१, २, ४ निचृदनुष्टुप् । ३ अनुष्टुप् । ५ विराडनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥१०॥

शास इत्था महाँ अस्यमित्रखादो अद्भुतः ।
न यस्य हन्यते सखा न जीयते कदा चन ॥१॥
स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः सोमपा अभयंकरः ॥२॥
वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः ॥३॥
वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
यो अस्माँ अभिदासत्यधरं गमया तमः ॥४॥
अपेन्द्र द्विषतो मनोऽप जिज्यासतो वधम् ।
वि मन्योः शर्म यच्छ वरीयो यवया वधम् ॥५॥

॥ १५३ ॥ ऋषिः—१-५ इन्द्रमातरो देवजामयः ॥ देवता—इन्द्रः ॥ छन्दः—१ निचृद्गायत्री । २-५ विराड्गायत्री ॥ स्वरः—षड्जः ॥

॥११॥

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते । भेजानासः सुवीर्यम् ॥१॥
त्वमिन्द्र बलादधि सहसो जात ओजसः । त्वं वृषन्वृषेदसि ॥२॥
त्वमिन्द्रासि वृत्रहा व्य१न्तरिक्षमतिरः । उद्द्यामस्तभ्ना ओजसा ॥३॥
त्वमिन्द्र सजोषसमर्कं बिभर्षि बाह्वोः । वज्रं शिशान ओजसा ॥४॥
त्वमिन्द्राभिभूरसि विश्वा जातान्योजसा । स विश्वा भुव आभवः ॥५॥

॥ १५४ ॥ ऋषिः—१-५ यमी ॥ देवता—भाववृत्तम् ॥ छन्दः—१, ३, ४ अनुष्टुप् । २, ५ निचृदनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥१२॥ सोम एकेभ्यः पवते घृतमेक उपासते ।
येभ्यो मधु प्रधावति ताँश्चिदेवापि गच्छतात् ॥१॥
तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः ।
तपो ये चक्रिरे महस्ताँश्चिदेवापि गच्छतात् ॥२॥
ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः ।
ये वा सहस्रदक्षिणास्ताँश्चिदेवापि गच्छतात् ॥३॥
ये चित्पूर्व ऋतसाप ऋतावान ऋतावृधः ।
पितॄन्तपस्वतो यम ताँश्चिदेवापि गच्छतात् ॥४॥
सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् ।
ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात् ॥५॥

॥ १५५ ॥ ऋषिः—१-५ शिरिम्बिठो भारद्वाजः ॥ देवता—१, ४ अलक्ष्मीघ्नम् । २, ३ ब्रह्मणस्पतिः । ५ विश्वेदेवाः ॥ छन्दः—१, २, ४ निचृदनुष्टुप् । ३ अनुष्टुप् । ५ विराडनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥१३॥ अरायि काणे विकटे गिरिं गच्छ सदान्वे ।
शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥१॥
चत्तो इतश्चत्तामुतः सर्वा भ्रूणान्यारुषी ।
अराय्यं ब्रह्मणस्पते तीक्ष्णशृङ्गोदृषन्निहि ॥२॥
अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम् ।
तदा रभस्व दुर्हणो तेन गच्छ परस्तरम् ॥३॥
यद्ध प्राचीरजगन्तोरो मण्डूरधाणिकीः ।
हता इन्द्रस्य शत्रवः सर्वे बुद्बुदयाशवः ॥४॥
परीमे गामनेषत पर्यग्निमहृषत ।
देवेष्वक्रत श्रवः क इमाँ आ दधर्षति ॥५॥

॥ १५६ ॥ ऋषिः—१-५ केतुराग्नेयः ॥ देवता—अग्निः ॥ छन्दः—१, ३, ५ गायत्री । २, ४ निचृद्गायत्री ॥ स्वरः—षड्जः ॥

॥१४॥ अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु । तेन जेष्म धनंधनम् ॥१॥
यया गा आकरामहे सेनयाग्ने तवोत्या । तां नो हिन्व मघत्तये ॥२॥

आग्ने स्थूरं रयिं भर पृथुं गोमन्तमश्विनम् । अङ्धि खं वर्तया पणिम् ॥३॥
अग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि । दधज्ज्योतिर्जनेभ्यः ॥४॥
अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् । बोधा स्तोत्रे वयो दधत् ॥५॥

॥ १५७ ॥ ऋषिः—१-५ भुवन आप्त्यः, साधनो वा भौवनः ॥ देवता—विश्वेदेवाः ॥ छन्दः—द्विपदा-त्रिष्टुप् ॥ स्वरः—धैवतः ॥

॥१५॥ इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः । १
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह चीक्लृपाति ॥१॥ २
आदित्यैरिन्द्रः सगणो मरुद्भिरस्माकं भूत्वविता तनूनाम् । ३
हत्वाय देवा असुरान्यदायन्देवा देवत्वमभिरक्षमाणाः ॥२॥ ४
प्रत्यञ्चमर्कमनयञ्छचीभिरादित्स्वधामिषिरां पर्यपश्यन् ॥३॥ ५

॥ १५८ ॥ ऋषिः—१-५ चक्षुः सौर्यः ॥ देवता—सूर्यः ॥ छन्दः—१ आर्चीस्वराड् गायत्री । २ स्वराड्-गायत्री । ३ गायत्री । ४ निचृद् गायत्री । ५ विराड् गायत्री ॥ स्वरः—षड्जः ॥

॥१६॥ सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः ॥१॥
जोषा सवितर्यस्य ते हरः शतं सवाँ अर्हति । पाहि नो दिद्युतः पतन्त्याः ॥२॥
चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नः ॥३॥
चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः । सं चेदं वि च पश्येम ॥४॥
सुसंदृशं त्वा वयं प्रति पश्येम सूर्य । वि पश्येम नृचक्षसः ॥५॥

॥ १५९ ॥ ऋषिः—१-६ शची पौलोमी ॥ देवता—शची पौलोमी ॥ छन्दः—१-३, ५ निचृदनुष्टुप् । ४ पादनिचृदनुष्टुप् । ६ अनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥१७॥ उदसौ सूर्यो अगादुदयं मामको भगः ।
अहं तद्विद्वला पतिमभ्यसाक्षि विषासहिः ॥१॥
अहं केतुरहं मूर्धाहमुग्रा विवाचनी ।
ममेदनु क्रतुं पतिः सेहानाया उपाचरेत् ॥२॥
मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट् ।
उताहमस्मि संजया पत्यौ मे श्लोक उत्तमः ॥३॥
येनेन्द्रो हविषा कृत्व्यभवद्द्युम्न्युत्तमः ।
इदं तदक्रि देवा असपत्ना किलाभुवम् ॥४॥

असपत्ना सपत्नघ्नी जयन्त्यभिभूवरी ।
आवृक्षमन्यासां वर्चो राधो अस्थेयसामिव ॥५॥
समजैषमिमा अहं सपत्नीरभिभूवरी ।
यथाहमस्य वीरस्य विराजानि जनस्य च ॥६॥

॥ १६० ॥ ऋषिः—१-५ पूरणो वैश्वामित्रः ॥ देवता—इन्द्रः ॥ छन्दः—१, ३ त्रिष्टुप् ।
२ पादनिचृत्त्रिष्टुप् । ४, ५ विराट् त्रिष्टुप् ॥ स्वरः—धैवतः ॥

॥१८॥ तीव्रस्याभिवयसो अस्य पाहि सर्वरथा वि हरी इह मुञ्च ।
इन्द्र मा त्वा यजमानासो अन्ये नि रीरमन्तुभ्यमिमे सुतासः ॥१॥
तुभ्यं सुतास्तुभ्यमु सोत्वासस्त्वां गिरः श्वात्र्या आ ह्वयन्ति ।
इन्द्रेदमद्य सवनं जुषाणो विश्वस्य विद्वाँ इह पाहि सोमम् ॥२॥
य उशता मनसा सोममस्मै सर्वहृदा देवकामः सुनोति ।
न गा इन्द्रस्तस्य परा ददाति प्रशस्तमिच्चारुमस्मै कृणोति ॥३॥
अनुस्पष्टो भवत्येषो अस्य यो अस्मै रेवान्न सुनोति सोमम् ।
निररत्नौ मघवा तं दधाति ब्रह्मद्विषो हन्त्यनानुदिष्टः ॥४॥
अश्वायन्तो गव्यन्तो वाजयन्तो हवामहे त्वोपगन्तवा उ ।
आभूषन्तस्ते सुमतौ नवायां वयमिन्द्र त्वा शुनं हुवेम ॥५॥

॥ १६१ ॥ ऋषिः—१-५ यक्ष्मनाशनः प्राजापत्यः ॥ देवता—राजयक्ष्मघ्नम् ॥ छन्दः—१, ४ भुरिक् त्रिष्टुप् ।
२ त्रिष्टुप् । ३ निचृत्त्रिष्टुप् । ५ निचृदनुष्टुप् ॥ स्वरः—१-४ धैवतः । ५ गान्धारः ॥

॥१९॥ मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।
ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥१॥
यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ।
तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय ॥२॥
सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम् ।
शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ॥३॥
शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥४॥
आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव ।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥५॥

॥ १६२ ॥ ऋषिः—१-६ रक्षोहा ब्राह्मः ॥ देवता—गर्भसंस्रावे प्रायश्चित्तम् ॥ छन्दः—१, २, ४ निचृदनुष्टुप् । ३, ५, ६ अनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥२०॥

ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः ।
अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥१॥
यस्ते गर्भममीवा दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥२॥
यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम् ।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥३॥
यस्त ऊरू विहरत्यन्तरा दंपती शये ।
योनिं यो अन्तरारेळिह तमितो नाशयामसि ॥४॥
यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥५॥
यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥६॥

॥ १६३ ॥ ऋषिः—१-६ विवृहा काश्यपः ॥ देवता—यक्ष्मघ्नम् ॥ छन्दः—१, ६ अनुष्टुप् । २-५ निचृदनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥२१॥

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि ।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥१॥
ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां वि वृहामि ते ॥२॥
आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ।
यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ॥३॥
ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं श्रोणिभ्यां भासदाद्भंससो वि वृहामि ते ॥४॥
मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥५॥
अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥६॥

॥ १६४ ॥ ऋषिः—१-५ प्रचेताः ॥ देवता—दुःस्वप्नघ्नम् ॥ छन्दः—१ निचृदनुष्टुप् । २ अनुष्टुप् । ४ विराडनुष्टुप् । ३ आर्चीभुरिक्त्रिष्टुप् । ५ पङ्क्तिः ॥ स्वरः—१, २, ४ गान्धारः । ३ धैवतः । ५ पञ्चमः ॥

॥२२॥

अपेहि मनसस्पतेऽप क्राम परश्चर ।
परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः ॥१॥
भद्रं वै वरं वृणते भद्रं युञ्जन्ति दक्षिणम् ।
भद्रं वैवस्वते चक्षुर्बहुत्रा जीवतो मनः ॥२॥
यदाशसा निःशसाभिशसोपारिम जाग्रतो यत्स्वपन्तः ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद्दधातु ॥३॥
यदिन्द्र ब्रह्मणस्पतेऽभिद्रोहं चरामसि ।
प्रचेता न आङ्गिरसो द्विषतां पात्वंहसः ॥४॥
अजैष्माद्यासनाम चाभूमानागसो वयम् ।
जाग्रत्स्वप्नः संङ्कल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥५॥

॥ १६५ ॥ ऋषिः—१-५ कपोतो नैर्ऋतः ॥ देवता—कपोतापहतौ प्रायश्चित्तं वैश्वदेवम् ॥ छन्दः—१ स्वराट्त्रिष्टुप् । २, ३ निचृत् त्रिष्टुप् । ४ भुरिक् त्रिष्टुप् । ५ त्रिष्टुप् ॥ स्वरः—धैवतः ॥

॥२३॥

देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥१॥
शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु ।
अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ॥२॥
हेतिः पक्षिणी न दभात्यस्मानाष्ट्र्यां पदं कृणुते अग्निधाने ।
शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु मा नो हिंसीदिह देवाः कपोतः ॥३॥
यदुलूको वदति मोघमेतद्यत्कपोतः पदमग्नौ कृणोति ।
यस्य दूतः प्रहित एष एतत्तस्मै यमाय नमो अस्तु मृत्यवे ॥४॥
ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परि गां नयध्वम् ।
संयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्जं प्र पतात्पतिष्ठः ॥५॥

॥ १६६ ॥ ऋषिः—१-५ ऋषभो वैराजः शाक्वरो वा ॥ देवता—सपत्नघ्नम् ॥ छन्दः—१, २ अनुष्टुप् । ३, ४ निचृदनुष्टुप् । ५ महापङ्क्तिः ॥ स्वरः—१-४ गान्धारः । ५ पञ्चमः ॥

॥२४॥

ऋषभं मा समानानां सपत्नानां विषासहिम् ।
हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥१॥

अहमस्मि सपत्नहेन्द्र इवारिष्टो अक्षतः ।
अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ॥२॥
अत्रैव वोऽपि नह्याम्युभे आर्त्नी इव ज्यया ।
वाचस्पते नि षेधेमान्यथा मदधरं वदान् ॥३॥
अभिभूरहमागमं विश्वकर्मेण धाम्ना ।
आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥४॥
योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम् ।
अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव ॥५॥

॥ १६७ ॥ ऋषिः—१-४ विश्वामित्रजमदग्नी ॥ देवता—१, २, ४ इन्द्रः । ३ लिङ्गोक्ताः ॥ छन्दः—१ भार्चीस्वराड् जगती । २, ४ विराड् जगती । ३ जगती ॥ स्वरः—निषादः ॥

॥२५॥ तुभ्येदमिन्द्र परि षिच्यते मधु त्वं सुतस्य कलशस्य राजसि ।
त्वं रयिं पुरुवीरामु नस्कृधि त्वं तपः परितप्याजयः स्वः ॥१॥
स्वर्जितं महि मन्दानमन्धसो हवामहे परि शक्रं सुताँ उप ।
इमं नो यज्ञमिह बोध्या गहि स्पृधो जयन्तं मघवानमीमहे ॥२॥
सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि ।
तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ॥३॥
प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे ।
सुते सातेन यद्यागमं वां प्रति विश्वामित्रजमदग्नी दमे ॥४॥

॥ १६८ ॥ ऋषिः—१-४ अनिलो वातायनः ॥ देवता—वायुः ॥ छन्दः—१, ३ निचृत्त्रिष्टुप् । २, ४ त्रिष्टुप् ॥ स्वरः—धैवतः ॥

॥२६॥ वातस्य नु महिमानं रथस्य रुजन्नेति स्तनयन्नस्य घोषः ।
दिविस्पृग्यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणुमस्यन् ॥१॥
सं प्रेरते अनु वातस्य विष्ठा ऐनं गच्छन्ति समनं न योषाः ।
ताभिः सयुक्सरथं देव ईयतेऽस्य विश्वस्य भुवनस्य राजा ॥२॥
अन्तरिक्षे पथिभिरीयमानो न नि विशते कतमच्चनाहः ।
अपां सखा प्रथमजा ऋतावा क्व स्विज्जातः कुत आ बभूव ॥३॥
आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः ।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥४॥

॥ १६९ ॥ ऋषिः—१-४ शबरः काक्षीवतः ॥ देवता—गावः ॥ छन्दः—१ विराट्त्रिष्टुप् । २, ४ त्रिष्टुप् । ३ निचृत्त्रिष्टुप् ॥ स्वरः—धैवतः ॥

॥२७॥ मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् ।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृळ ॥१॥
याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद ।
या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥२॥
या देवेषु तन्व१मैरयन्त यासां सोमो विश्वा रूपाणि वेद ।
ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि ॥३॥
प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः ।
शिवाः सतीरुप नो गोष्ठमाकस्तासां वयं प्रजया सं सदेम ॥४॥

॥ १७० ॥ ऋषिः—१-४ विभ्राट् सूर्यः ॥ देवता—सूर्यः ॥ छन्दः—१, ३, विराड्जगती । २ जगती ४ आस्तारपङ्क्तिः ॥ स्वरः—१-३ निषादः । ४ पञ्चमः ॥

॥२८॥ विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥१॥
विभ्राड्बृहत्सुभृतं वाजसातमं धर्मन्दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥२॥
इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
विश्वभ्राड्भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥३॥
विभ्राजञ्ज्योतिषा स्व१रगच्छो रोचनं दिवः ।
येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता ॥४॥

॥ १७१ ॥ ऋषिः—१-४ इटो भार्गवः ॥ देवता—इन्द्रः ॥ छन्दः—१ निचृद्गायत्री । २, ४ विराड्-गायत्री । ३ पादनिचृद् गायत्री ॥ स्वरः—षड्जः ॥

॥२९॥ त्वं त्यमिटतो रथमिन्द्र प्रावः सुतावतः । अशृणोः सोमिनो हवम् ॥१॥
त्वं मखस्य दोधतः शिरोऽव त्वचो भरः । अगच्छः सोमिनो गृहम् ॥२॥
त्वं त्यमिन्द्र मर्त्यमास्त्रबुध्नाय वेन्यम् । मुहुः श्रथ्ना मनस्यवे ॥३॥
त्वं त्यमिन्द्र सूर्यं पश्चा सन्तं पुरस्कृधि । देवानां चित्तिरो वशम् ॥४॥

॥ १७२ ॥ ऋषिः—१-४ संवर्तः ॥ देवता—उषा ॥ छन्दः—पिपीलिकामध्यागायत्री ॥ स्वरः—षड्जः

॥३०॥ आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभिः ।
आ याहि वस्व्या धिया मंहिष्ठो जारयन्मखः सुदानुभिः ॥१॥

पितुर्भृतो न तन्तुमित्सुदानवः प्रति दध्मो यजामसि । ३
उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता ॥२॥ ४

॥ १७३ ॥ ऋषिः—१-६ ध्रुवः ॥ देवता—राज्ञःस्तुतिः ॥ छन्दः—१, ३-५ अनुष्टुप् । २ भुरिगनुष्टुप् ।
६ निचृदनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥३१॥

आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥१॥
इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः ।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥२॥
इममिन्द्रो अदीधरद्ध्रुवं ध्रुवेण हविषा ।
तस्मै सोमो अधि ब्रवत्तस्मा उ ब्रह्मणस्पतिः ॥३॥
ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ।
ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामयम् ॥४॥
ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।
ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥५॥
ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि ।
अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥६॥

॥ १७४ ॥ ऋषिः—१-५ अभीवर्तः ॥ देवता—राज्ञः स्तुतिः ॥ छन्दः—१, ५ निचृदनुष्टुप् ।
२, ३ विराडनुष्टुप् । ४ पादनिचृदनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥३२॥

अभीवर्तेन हविषा येनेन्द्रो अभिवावृते ।
तेनास्मान्ब्रह्मणस्पतेऽभि राष्ट्राय वर्तय ॥१॥
अभिवृत्य सपत्नानभि या नो अरातयः ।
अभि पृतन्यन्तं तिष्ठाभि यो न इरस्यति ॥२॥
अभि त्वा देवः सविताभि सोमो अवीवृतत् ।
अभि त्वा विश्वा भूतान्यभीवर्तो यथाससि ॥३॥
येनेन्द्रो हविषा कृत्व्यभवद्द्युम्न्युत्तमः ।
इदं तदक्रि देवा असपत्नः किलाभुवम् ॥४॥
असपत्नः सपत्नहाभिराष्ट्रो विषासहिः ।
यथाहमेषां भूतानां विराजानि जनस्य च ॥५॥

॥ १७५ ॥ ऋषिः—१-४ ऊर्ध्वग्रावार्बुदः ॥ देवता—ग्रावाणः ॥ छन्दः—१, २, ४ गायत्री । ३ विराड्गायत्री ॥ स्वरः—षड्जः ॥

॥३३॥ प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा । धूर्षु युज्यध्वं सुनुत ॥१॥
ग्रावाणो अप दुच्छुनामप सेधत दुर्मतिम् । उस्राः कर्तन भेषजम् ॥२॥
ग्रावाण उपरेष्वा महीयन्ते सजोषसः । वृष्णे दधतो वृष्ण्यम् ॥३॥
ग्रावाणः सविता नु वो देवः सुवतु धर्मणा । यजमानाय सुन्वते ॥४॥

॥ १७६ ॥ ऋषिः—१-४ सूनुरार्भवः ॥ देवता—१ ऋभवः । २-४ अग्निः ॥ छन्दः—१, ४ विराडनुष्टुप् । ३ अनुष्टुप् । २ निचृद् गायत्री ॥ स्वरः—१, ३, ४ गान्धारः । २ षड्जः ॥

॥३४॥ प्र सूनव ऋभूणां बृहन्नवन्त वृजना ।
क्षामा ये विश्वधायसोऽश्नन्धेनुं न मातरम् ॥१॥
प्र देवं देव्या धिया भरता जातवेदसम् ।
हव्या नो वक्षदानुषक् ॥२॥
अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते ।
रथो न योरभीवृतो घृणीवाञ्चेतति त्मना ॥३॥
अयमग्निरुरुष्यत्यमृतादिव जन्मनः ।
सहसश्चित्सहीयान्देवो जीवातवे कृतः ॥४॥

॥ १७७ ॥ ऋषिः—१-३ पतङ्गः प्राजापत्यः ॥ देवता—मायाभेदः ॥ छन्दः—१ जगती । २ विराट् त्रिष्टुप् । ३ निचृत्त्रिष्टुप् ॥ स्वरः—१ निषादः । २, ३ धैवतः ॥

॥३५॥ पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः ।
समुद्रे अन्तः कवयो वि चक्षते मरीचीनां पदमिच्छन्ति वेधसः ॥१॥
पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः ।
तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो नि पान्ति ॥२॥
अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥३॥

॥ १७८ ॥ ऋषिः—१-३ अरिष्टनेमिस्तार्क्ष्यः ॥ देवता—तार्क्ष्यः ॥ छन्दः—१ विराट् त्रिष्टुप् । २ निचृत्त्रिष्टुप् । ३ त्रिष्टुप् ॥ स्वरः—धैवतः ॥

॥३६॥ त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥१॥

इन्द्रस्येव रातिमाजोहुवानाः स्वस्तये नावमिवा रुहेम ।
उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम ॥२॥
सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।
सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ॥३॥

॥ १७९ ॥ ऋषिः—१ शिविरौशीनरः । २ प्रतर्दनः काशिराजः । ३ वसुमना रौहिदश्वः ॥ देवता—इन्द्रः ॥
छन्दः—१ निचृदनुष्टुप् । २ निचृत्त्रिष्टुप् । ३ त्रिष्टुप् ॥ स्वरः—१ गान्धारः । २, ३ धैवतः ॥

॥३७॥
उत्तिष्ठताव पश्यतेन्द्रस्य भागमृत्वियम् ।
यदि श्रातो जुहोतन यद्यश्रातो ममत्तन ॥१॥
श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो विमध्यम् ।
परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम् ॥२॥
श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रातं मन्ये तदृतं नवीयः ।
माध्यंदिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन्पुरुकृज्जुषाणः ॥३॥

॥ १८० ॥ ऋषिः—१-३ जयः ॥ देवता—इन्द्रः ॥ छन्दः—१, २ त्रिष्टुप् । ३ विराट् त्रिष्टुप् ।
स्वरः—धैवतः ॥

॥३८॥
प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु ।
इन्द्रा भर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम् ॥१॥
मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताळ्हि वि मृधो नुदस्व ॥२॥
इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् ।
अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥३॥

॥ १८१ ॥ ऋषिः—१ प्रथो वासिष्ठः । २ सप्रथो भारद्वाजः । ३ घर्मः सौर्यः ॥ देवता—विश्वेदेवाः ॥
छन्दः—१ निचृत्त्रिष्टुप् । २ त्रिष्टुप् । ३ पादनिचृत्त्रिष्टुप् ॥ स्वरः—धैवतः ॥

॥३९॥
प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् ।
धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥१॥
अविन्दन्ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत् ।
धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो बृहदा चक्रे अग्नेः ॥२॥

तेऽविन्दन्मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानम् ।
धातुर्द्युतानात्सवितुश्च विष्णोरा सूर्यादभरन्घर्ममेते ॥३॥

॥ १८२ ॥ ऋषिः—१-३ तपुर्मूर्धा बार्हस्पत्यः ॥ देवता—बृहस्पतिः ॥ छन्दः—१ भुरिक् त्रिष्टुप् ।
२ विराट् त्रिष्टुप् । ३ त्रिष्टुप् ॥ स्वरः—धैवतः ॥

॥४०॥

बृहस्पतिर्नयतु दुर्गहा तिरः पुनर्नेषदघशंसाय मन्म ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥१॥
नराशंसो नोऽवतु प्रयाजे शं नो अस्त्वनुयाजो हवेषु ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥२॥
तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हन्तवा उ ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥३॥

॥ १८३ ॥ ऋषिः—१-३ प्राजावान्प्राजापत्यः ॥ देवता—अन्वृचं यजमानयजमानपत्नीहोत्राशिषः ॥
छन्दः—१ त्रिष्टुप् । २, ३ विराट् त्रिष्टुप् ॥ स्वरः—धैवतः ॥

॥४१॥

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् ।
इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥१॥
अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् ।
उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥२॥
अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः ।
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥३॥

॥ १८४ ॥ ऋषिः—१-३ त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यः ॥ देवताः—लिङ्गोक्ताः ( गर्भार्थाशिषः )
छन्दः—१, २ अनुष्टुप् । ३ निचृदनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥४२॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥१॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥२॥
हिरण्ययी अरणी यं निर्मन्थतो अश्विना ।
तं ते गर्भं हवामहे दशमे मासि सूतवे ॥३॥

॥ १८५ ॥ ऋषिः—१-३ सत्यधृतिर्वारुणिः ॥ देवता—अदितिः ( स्वस्त्ययनम् ) ॥ छन्दः—१, ३ विराड् गायत्री । २ निचृद् गायत्री ॥ स्वरः—षड्जः ॥

॥४३॥ महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥१॥
नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः ॥२॥
यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥३॥

॥ १८६ ॥ ऋषिः—१-३ उलो वातायनः ॥ देवता—वायुः ॥ छन्दः—१, २ गायत्री । ३ निचृद् गायत्री ॥ स्वरः—षड्जः ॥

॥४४॥ वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूंषि तारिषत् ॥१॥
उत वात पितासि न उत भ्रातोत नः सखा । स नो जीवातवे कृधि ॥२॥
यददो वात ते गृहे३ऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ॥३॥

॥ १८७ ॥ ऋषिः—१-५ वत्स आग्नेयः ॥ देवता—अग्निः ॥ छन्दः—१ निचृद् गायत्री । २-५ गायत्री ॥ स्वरः—षड्जः ॥

॥४५॥ प्राग्नये वाचमीरय वृषभाय क्षितीनाम् । स नः पर्षदति द्विषः ॥१॥
यः परस्याः परावतस्तिरो धन्वातिरोचते । स नः पर्षदति द्विषः ॥२॥
यो रक्षांसि निजूर्वत्यग्निस्तिग्मेन शोचिषा । स नः पर्षदति द्विषः ॥३॥
यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पर्षदति द्विषः ॥४॥
यो अस्य पारे रजसः शुक्रो अग्निरजायत । स नः पर्षदति द्विषः ॥५॥

॥ १८८ ॥ ऋषिः—१-३ श्येन आग्नेयः ॥ देवता—अग्निर्जातवेदाः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

॥४६॥ प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् । इदं नो बर्हिरासदे ॥१॥
अस्य प्र जातवेदसो विप्रवीरस्य मीळ्हुषः । महीमियर्मि सुष्टुतिम् ॥२॥
या रुचो जातवेदसो देवत्रा हव्यवाहनीः । ताभिर्नो यज्ञमिन्वतु ॥३॥

॥ १८९ ॥ ऋषिः—१-३ सार्पराज्ञी ॥ देवता—सार्पराज्ञी सूर्यो वा ॥ छन्दः—१ निचृद् गायत्री । २ विराड् गायत्री । ३ गायत्री ॥ स्वरः—षड्जः ॥

॥४७॥ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥१॥
अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥२॥
त्रिंशद्धाम वि राजति वाक्पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥३॥

॥ १९० ऋषिः—१-३ अघमर्षणो माधुच्छन्दसः ॥ देवता—भाववृत्तम् ॥ छन्दः—१ विराडनुष्टुप् । २ अनुष्टुप् । ३ पादनिचृदनुष्टुप् ॥ स्वरः—गान्धारः ॥

॥४८॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।
ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥१॥
समुद्रादर्णवादधि संवत्सरो अजायत ।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥२॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥३॥

॥ १९१ ॥ ऋषिः—१-४ संवननः ॥ देवता—अग्निः । २-४ संज्ञानम् ॥ छन्दः—१ विराडनुष्टुप् २ अनुष्टुप् । ४ निचृदनुष्टुप् । ३ त्रिष्टुप् ॥ स्वरः—१, २, ४ गान्धारः । ३ धैवतः ॥

॥४९॥ संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इळस्पदे समिध्यसे स नो वसून्या भर ॥१॥
सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥२॥
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥३॥
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥४॥

॥ इत्यष्टमाष्टकेऽष्टमोऽध्यायः ॥

[ अष्टमाध्याये वर्गाः ४९, सूक्तानि ४९, ऋचः २१८ ]

[ अष्टमाष्टके अध्यायाः ८, वर्गाः २४६, सूक्तानि १४६, ऋचः १२८१ ]

॥ इत्यष्टमोऽष्टकः ॥

[ दशममण्डलेऽनुवाकाः १२, सूक्तानि १९१, ऋचः १७५४ ]

॥ इति दशमं मण्डलम् ॥

ऋग्वेदे अष्टकाः ८, अध्यायाः ६४, वर्गाः २०२४ ।
मण्डलानि १०, अनुवाकाः ८५, सूक्तानि १०२८, ऋचः १०५५२ ॥

## ॥ इति ऋग्वेदसंहिता ॥

## मुद्रिताया ऋग्वेदसंहिताया अध्यायवर्गादिविभागं मण्डलानुवाकादिविभागश्च

### अष्टकक्रमसारणी

| अष्टके | अध्यायाः | वर्गाः | सूक्तानि | ऋचः |
|---|---|---|---|---|
| १ | ८ | २६५ | १२१ | १३७० |
| २ | ८ | २२१ | ११९ | ११४७ |
| ३ | ८ | २२५ | १२२ | १२०९ |
| ४ | ८ | २५० | १४० | १२८९ |
| ५ | ८ | २३८ | १२९ | १२६३ |
| ६ | ८ | ३३१ | १३५ | १७३० |
| ७ | ८ | २४८ | ११६ | १२६३ |
| ८ | ८ | २४६ | १४६ | १२८१ |
| योगः — | ६४ | २०२४ | १०२८ | १०५५२ |

### मण्डलक्रमसारणी

| मण्डले | अनुवाकाः | सूक्तानि | ऋचः |
|---|---|---|---|
| १ | २४ | १९१ | २००६ |
| २ | ४ | ४३ | ४२९ |
| ३ | ५ | ६२ | ६१७ |
| ४ | ५ | ५८ | ५८९ |
| ५ | ६ | ८७ | ७२७ |
| ६ | ६ | ७५ | ७६५ |
| ७ | ६ | १०४ | ८४१ |
| ८ | १० | १०३ | १७१६ |
| ९ | ७ | ११४ | ११०८ |
| १० | १२ | १९१ | १७५४ |
| योगः — | ८५ | १०२८ | १०५५२ |

# अथ ऋग्वेदमन्त्राणां वर्णानुक्रमणी

| | |
|---|---|
| अदितिर्ह्यजनिष्ट दक्ष | १०. ७२. ५ |
| अदिते मित्र वरुणोत | २. २७. १४ |
| अदित्सन्तं चिदाघृणे | ६. ५३. ३ |
| अदिद्युतत्स्वपाको विभावाग्ने | ६. ११. ४ |
| अदृश्रमस्य केतवो वि | १. ५०. ३ |
| अदृष्टान्हन्त्यायत्यथो | १. १९१. २ |
| अदेदिष्ट वृत्रहा गोपति | ३. ३१. २१ |
| अदेवाद्देवः प्रचता गुहा | १०. १२४. २ |
| अदेवेन मनसा यो | २. २३. १२ |
| अदो यद्दारु प्लवते | १०. १५५. ३ |
| अद्धीदिन्द्र प्रस्थितेमा | १०. ११६. ८ |
| अद्भिः सोम पपृचानस्य | ९. ७४. ९ |
| अद्या चिन्नू चित्तदपो | ६. ३०. ३ |
| अद्या दूतं वृणीमहे | १. ४४. ३ |
| अद्या देवा उदिता | १. ११५. ६ |
| अद्याद्या श्वःश्व इन्द्र | ८. ६१. १७ |
| अद्या नो देव सवितः | ५. ८२. ४ |
| अद्या मुरीय यदि यातुधानो | ७. १०४. १५ |
| अधेदु प्राणीदममन्निमाहा | १०. ३२. ८ |
| अद्रिणा ते मन्दिन इन्द्र | १०. २८. ३ |
| अद्रिभिः सुतः पवते | ९. ७१. ३ |
| अद्रिभिः सुतः पवसे | ९. ८६. २३ |
| अद्रिभिः सुतो मतिभिश्च | ९. ७५. ४ |
| अद्रोघमा वहोशतो यविष्ठ्य | ८. ६०. ४ |
| अद्रोघ सत्यं तव तन्महित्वं | ३. ३२. ९ |
| अद्वेषो अद्य बर्हिषः | १०. ३५. ९ |
| अद्वेषो नो मरुतो गातु | ५. ८७. ८ |
| अधः पश्यस्व मोपरि संतरां | ८. ३३. १९ |
| अध क्रत्वा मघवन्तुभ्यं | ५. २९. ५ |
| अध क्षपा परिष्कृतो | ९. ९९. २ |
| अध ग्मन्ता नहुषो हवं | १. १२२. ११ |
| अध ग्मन्तोशना पृच्छते | १०. २२. ६ |
| अध जिह्वा पापतीति | ६. ६. ५ |
| अध ज्मो अध वा दिवो | ८. १. १८ |
| अध ते विश्वमनु | १. ५७. २ |
| अध त्यं द्रप्सं विभ्वं | १०. ११. ४ |
| अध त्वमिन्द्र विद्ध्यस्मान् | १०. ६१. २२ |
| अध त्वष्टा ते मह उग्र | ६. १७. १० |
| अध त्वा विश्वे पुर इन्द्र | ६. १७. ८ |
| अध त्विषीमाँ अभ्योजसा | २. २२. २ |

| | |
|---|---|
| अध द्युतानः पित्रोः | ४. ५. १० |
| अध द्यौश्चित्ते अप सा नु | ६. १७. ९ |
| अध द्रप्सो अंशुमत्या | ८. ९६. १५ |
| अध धारया मध्वा | ९. ९७. ११ |
| अध प्र जज्ञे तरणि | १. १२१. ६ |
| अध प्रियमिषिराय षष्टिं | ८. ४६. २९ |
| अध प्लायोगिरति दास | ८. १. ३३ |
| अध यच्चारथे गणे | ८. ४६. ३१ |
| अध यदिमे पवमान | ९. ११०. ९ |
| अध यद्राजाना गविष्टौ | १०. ६१. २३ |
| अध श्रुतं कवषं वृद्ध | ७. १८. १२ |
| अध श्वेतं कलशं गोभिरक्तं | ९. ७४. ८ |
| अध श्वेतं कलशं गोभिरक्त | ४. २७. ५ |
| अध स्म यस्यार्चयः | ५. ९. ५ |
| अध स्मा ते चर्षणयो | ६. २५. ७ |
| अध स्मा न उदवता | २. ३१. २ |
| अध स्मा नो वृधे | ६. ४६. ११ |
| अध स्मास्य पनयन्ति | ६. १२. ५ |
| अध स्या योषणा मही | ८. ४६. ३३ |
| अध स्वनादुत बिभ्युः | १. ९४. ११ |
| अध स्वनान्मरुतां | १. ३८. १० |
| अध स्वप्नस्य निर्विदे | १. १२०. १२ |
| अधाकृणोः पृथिवीं संदृशे | २. १३. ५ |
| अधाकृणोः प्रथमं वीर्यं | २. १७. ३ |
| अधा गाव उपमातिं | १०. ६१. २१ |
| अधा चिन्नु यद्दिधिषामहे | १०. १३२. ३ |
| अधा ते अप्रतिष्कुतं | ८. ९३. १२ |
| अधा त्वं हि नस्करो | ८. ८४. ६ |
| अधा नरो न्योहतेऽधा | ५. ५२. ११ |
| अधा नो विश्वसौभग | १. ४२. ६ |
| अधा न्वस्य जेन्यस्य | १०. ६१. २४ |
| अधा न्वस्य संदृशं | ७. ८८. २ |
| अधा मन्ये बृहदसुर्यमस्य | ६. ३०. २ |
| अधा मन्ये श्रत्ते अस्मा | १. १०४. ७ |
| अधा मही न आयस्यनाधृष्टो | ७. १५. १४ |
| अधा मातुरुषसः सप्त | ४. २. १५ |
| अधा यथा नः पितरः | ४. २. १६ |
| अधायि धीतिरससृग्र | १०. ३१. ३ |
| अधा यो विश्वा भुवनाभि | २. १७. ४ |
| अधाय्यग्निर्मानुषीषु | ३. ५. ३ |

अनु त्रितस्य युध्यतः ८. ७. २४
अनु त्वा मही पाजसी १. १२१. ११
अनु त्वा रथो अनु मर्यो १. १६३. ८
अनु त्वा रोदसी उभे ऋक्ष ८. ७६. ११
अनु त्वा रोदसी उभे चक्रं ८. ६. ३८
अनु त्वाहिघ्ने अध देव ६. १८. १४
अनु द्यावापृथिवी तत्त ६. १८. १५
अनु द्रप्सास इन्दव आपो ९. ६. ४
अनु द्वा जहिता नयोऽन्धं ४. ३०. १९
अनु पूर्वाण्योक्या ८. २५. १७
अनु प्रत्नस्यौकसः ८. ६९. १८
अनु प्रत्नस्यौकसो १. ३०. ९
अनु प्रत्नास आयवः ९. २३. २
अनु प्र येजे जन ओजो ६. ३६. २
अनु यदीं मरुतो मन्दसान ५. २९. २
अनुव्रताय रन्धयन्नपव्रता १. ५१. ९
अनु श्रुताममतिं वर्धदुर्वीं ५. ६२. ५
अनुस्पष्टो भवत्येषो १०. १६०. ४
अनु स्वधामक्षरन्नापो १. ३३. ११
अनु हि त्वा सुतं सोम ९. ११०. २
अनूनोदत्र हस्तयतो अद्रि ५. ४५. ७
अनूपे गोमान्गोभिरक्षाः ९. १०७. ९
अनृक्षरा ऋजवः सन्तु १०. ८५. २३
अनेनो वो मरुतो यामो ६. ६६. ७
अनेहसं प्रतरणं विवक्षणं ८. ४९. ४
अनेहसं वो हवमानमूतये ८. ५०. ४
अनेहो दात्रमदितेरनर्वं १. १८५. ३
अनेहो न उरुव्रज ८. ६७. १२
अनेहो मित्रार्यमन्नृवद्वरुण ८. १८. २१
अन्तरिक्षप्रां रजसो विमानीं १०. ९५. १७
अन्तरिक्षेण पतति १०. १३६. ४
अन्तरिक्षे पथिभिरीयमानो १०. १६८. ३
अन्तरिच्छन्ति तं जने ८. ७२. ३
अन्तरैश्चक्रैस्तनयाय ६. ६२. १०
अन्तर्दूतो रोदसी दस्म ३. ३. २
अन्तर्यच्छ जिघांसतो १०. १०२. ३
अन्तर्ह्यग्न ईयसे २. ६. ७
अन्तश्च प्रागा अदिति ८. ४८. २
अन्तश्चरति रोचनास्य १०. १८९. २
अन्ति चित्सन्तमह यज्ञं ८. ११. ४

अन्तिवामा दूरे अमित्र ७. ७७. ४
अन्यदद्य कर्वरमन्यदु ६. २४. ५
अन्यमस्मद्भिया इयमग्ने ८. ७५. १३
अन्यमू षु त्वं यम्यन्य १०. १०. १४
अन्यव्रतममानुष ८. ७०. ११
अन्यस्या वत्सं रिहती ३. ५५. १३
अन्या वो अन्यामव १०. ९७. १४
अन्ये जायां परि मृशन्त्यस्य १०. ३४. ४
अन्यो अन्यमनु गृभ्णात्येनो ७. १०३. ४
अन्वपां खान्यतृन्तमोजसा ७. ८२. ३
अन्वस्य स्थूरं ददृशे ८. १. ३४
अन्वह मासा अन्विद्वना १०. ८९. १३
अन्वेको वदति यद्ददाति २. १३. ३
अपघ्नन्तो अराव्णः पवमानाः ९. १३. ९
अपघ्नन्त्सोम रक्षसोऽभ्यर्ष ९. ६३. २९
अपघ्नन्नेषि पवमान ९. ९६. २३
अपघ्नन्पवते मृधोऽप ९. ६१. २५
अपघ्नन्पवसे मृधः क्रतु ९. ६३. २४
अप ज्योतिषा तमो १०. ६८. ५
अप त्यं परिपन्थिनं १. ४२. ३
अप त्यं वृजिनं रिपुं ६. ५१. १३
अप त्या अस्थुरनिरा ८. ४८. ११
अप त्ये तायवो यथा १. ५०. २
अप द्वारा मतीनां प्रत्ना ९. १०. ६
अप नः शोशुचदघमग्ने १. ९७. १
अप प्राच इन्द्र विश्वाँ १०. १३१. १
अप योरिन्द्रः पापज १०. १०५. ३
अपश्चिदेष विभ्वो दमूनाः ३. ३१. १६
अपश्यं गोपामनिपद्यमान १. १६४. ३१
१०. १७७. ३
अपश्यं ग्रामं वहमान १०. २७. १९
अपश्यं त्वा मनसा चेकितानं १०. १८३. १
अपश्यं त्वा मनसा दीध्यानां १०. १८३. २
अपश्यमस्य महतो १०. ७९. १
अप स्वसुरुषसो नग्जिहीते ७. ७१. १
अप हत रक्षसो भङ्गुरावतः १०. ७६. ४
अपां गर्भं दर्शतमोषधीनां ३. १. १३
अपां नपातमवसे १. २२. ६
अपां नपादा ह्यस्थादुपस्थं २. ३५. ९
अपां पेरुं जीवधन्यं भरामहे १०. ३६. ८

| | |
|---|---|
| अयमग्ने त्वे अपि | ८. ४४. २८ |
| अयमस्मान्वनस्पतिर्मा | ३. ५३. २० |
| अयमस्मासु काव्य | १०. १४४. २ |
| अयमस्मि जरितः पश्य | ८. १००. ४ |
| अयमिन्द्र वृषाकपिः | १०. ८६. १८ |
| अयमिन्द्रो मरुत्सखा | ८. ७६. २ |
| अयमिह प्रथमो धायि | ४. ७. १ |
| अयमु ते समतसि | १. ३०. ४ |
| अयमु ते सरस्वति | ७. ९५. ६ |
| अयमु त्वा विचर्षणे | ८. १७. ७ |
| अयमु वां पुरुतमो | ३. ६२. २ |
| अयमुशानः पर्यद्रिमुस्रा | ६. ३९. २ |
| अयमु ष्य प्र देवयु | १०. १७६. ३ |
| अयमु ष्य सुमहाँ | ७. ८. २ |
| अयमेक इत्था पुरूरु | ८. २५. १६ |
| अयमेमि विचाकशद् | १०. ८६. १९ |
| अयांसमग्ने सुक्षितिं जनाया | २. ३५. १५ |
| अया चित्तो विपानया | ९. ६५. १२ |
| अया ते अग्ने विधेमोर्जो | २. ६. २ |
| अया ते अग्ने समिधा | ४. ४. १५ |
| अया धिया च गव्यया | ८. ९३. १७ |
| अया निजघ्निरोजसा | ९. ५३. २ |
| अया पवस्व देवयु | ९. १०६. १४ |
| अया पवस्व धारया | ९. ६३. ७ |
| अया पवा पवस्वैना | ९. ९७. ५२ |
| अयाम धीवतो धियो | ८. ९२. ११ |
| अयामि घोष इन्द्र देव | ७. २३. २ |
| अयामि ते नमउक्तिं | ३. १४. २ |
| अया रुचा हरिण्या | ९. १११. १ |
| अया वाजं देवहितं | ६. १७. १५ |
| अया वीती परि स्रव | ९. ६१. १ |
| अया सोमः सुकृत्यया | ९. ४७. १ |
| अया ह त्यं मायया | ६. २२. ६ |
| अयुक्त सप्त शुन्ध्युवः | १. ५०. ९ |
| अयुक्त सप्त हरितः | ७. ६०. ३ |
| अयुक्त सूर एतशं | ९. ६३. ८ |
| अयुजो असमो नृभिरेकः | ८. ६२. २ |
| अयुञ्जन्त इन्द्र विश्वकृष्टी | १. १६९. २ |
| अयुद्ध इद्युधा वृतं शूर | ८. ४५. ३ |
| अयुद्धसेनो विभ्वा विभिन्दता | १०. १३८. ५ |
| अयुयुत्सन्ननवद्यस्य | १. ३३. ६ |
| अयोदंष्ट्रो अर्चिषा यातु | १०. ८७. २ |
| अयोद्धेव दुर्मद आ | १. ३२. ६ |
| अरं कामाय हरयो | १०. ९६. ७ |
| अरं कृण्वन्तु वेदिं | १. १७०. ४ |
| अरं क्षयाय नो महे | ८. १५. १३ |
| अरं त इन्द्र कुक्षये | ८. ९२. २४ |
| अरं दासो न मीळ्हुषे | ७. ८६. ७ |
| अरं म उस्रयाम्णे | ४. ३२. २४ |
| अरं मे गन्तं हवनायास्मै | ६. ६३. २ |
| अरं हि ष्मा सुतेषु णः | ८. ९२. २६ |
| अरण्यान्यरण्यान्यसौ | १०. १४६. १ |
| अरण्योर्निहितो जातवेदा | ३. २९. २ |
| अरमतिरनर्वणो विश्वो | ८. ३१. १२ |
| अरममाणो अत्येति गा | ९. ७२. ३ |
| अरमयः सरपसस्तराय | २. १३. १२ |
| अरमश्वाय गायति | ८. ९२. २५ |
| अरश्मानो येऽरथा अयुक्ता | ९. ९७. २० |
| अरा इवेदचरमा अहेव | ५. ५८. ५ |
| अराध्रि होता निषदा | १०. ५३. २ |
| अरायि काणे विकटे | १०. १५५. १ |
| अरावीदंशुः सचमान | ९. ७४. ५ |
| अरित्रं वां दिवस्पृथु | १. ४६. ८ |
| अरिष्टः स मर्तो विश्व | १०. ६३. १३ |
| अरुणप्सुरुषा अभू | ८. ७३. १६ |
| अरुणो मा सकृद्वृकः | १. १०५. १८ |
| अरुषस्य दुहितरा विरूपे | ६. ४९. ३ |
| अरुषो जनयन्गिरः सोमः | ९. २५. ५ |
| अरूरुचदुषसः पृश्निरग्रिय | ९. ८३. ३ |
| अरोरवीद्वृष्णो अस्य | २. ११. १० |
| अर्चत प्रार्चत प्रियमेधासो | ८. ६९. ८ |
| अर्चद्वृषा वृषभिः स्वेदुहव्यै | १. १७३. २ |
| अर्चन्तस्त्वा हवामहे | ५. १३. १ |
| अर्चन्ति नारीरपसो | १. ९२. ३ |
| अर्चा दिवे बृहते शूष्यं | १. ५४. ३ |
| अर्चामि ते सुमतिं | ४. ४. ८ |
| अर्चामि वां वर्धायापो | १०. १२. ४ |
| अर्चा शक्राय शाकिने | १. ५४. २ |
| अर्णांसि चित्पप्रथाना | ७. १८. ५ |
| अर्यमिद्वा उ अर्थिन | १. १०५. २ |

| | |
|---|---|
| अर्थिनो यन्ति चेदर्थं | ८. ७९. ५ |
| अर्घं वीरस्य शृतपामनिन्द्रं | ७. १८. १६ |
| अर्भको न कुमारकोऽधि | ८. ६९. १५ |
| अर्यमणं बृहस्पतिमिन्द्रं | १०. १४१. ५ |
| अर्यमणं वरुणं मित्रमेषा | ४. २. ४ |
| अर्यमा णो अदितिर्यज्ञियासो | ३. ५४. १८ |
| अर्यम्यं वरुण मित्र्यं वा | ५. ८५. ७ |
| अर्यो वा गिरो अभ्यर्च | १०. १४८. ३ |
| अर्यो विशां गातुरेति | १०. २०. ४ |
| अर्वद्भिरग्ने अर्वतो | १. ७३. ९ |
| अर्वन्तो न श्रवसो | ७. ९०. ७ |
| | ७. ९१. ७ |
| अर्वाँ इव श्रवसे साति | ९. ९७. २५ |
| अर्वाग्रथं नि यच्छतं | ८. ३५. २२ |
| अर्वाग्रथं विश्ववारं त | ६. ३७. १ |
| अर्वाङेहि सोमकामं | १. १०४. ९ |
| अर्वाङ् त्रिचक्रो मधुवाहनो | १. १५७. ३ |
| अर्वाङ्नरा दैव्येनावसा | ७. ८२. ८ |
| अर्वाचीनं सु ते मन | ३. ३७. २ |
| अर्वाचीनो वसो भवास्मे | ४. ३२. १४ |
| अर्वाची सुभगे भव | ४. ५७. ६ |
| अर्वाञ्चं त्वा पुरुष्टुत | ८. ६. ४५ |
| | ८. ३२. ३० |
| अर्वाञ्चं त्वा सुखे रथे | ३. ४१. ९ |
| अर्वाञ्चं दैव्यं जनमग्ने | १. ४५. १० |
| अर्वाञ्चमद्य यय्यं नृवाहणं | २. ३७. ५ |
| अर्वाञ्चा वां सप्तयो | १. ४७. ८ |
| अर्वाञ्चो अद्या भवता | २. २९. ६ |
| अर्वावतो न आ गहि | ३. ४०. ८ |
| अर्वावतो न आ गह्यथो | ३. ३७. ११ |
| अर्षा णः सोम शं गवे | ९. ६१. १५ |
| अर्षा सोम द्युमत्तमोऽभि | ९. ६५. १९ |
| अर्हन्तो ये सुदानवो | ५. ५२. ५ |
| अर्हन्बिभर्षि सायकानि | २. ३३. १० |
| अलातृणो वल इन्द्र व्रजो | ३. ३०. १० |
| अलाय्यस्य परशुर्ननाश | ९. ६७. ३० |
| अवंशे द्यामस्तभायद् | २. १५. २ |
| अवः परेण पर एनावरेण | १. १६४. १७ |
| अवः परेण पितरं यो | १. १६४. १८ |
| अवक्रक्षिणं वृषभं यथाजुरं | ८. १. २ |

| | |
|---|---|
| अव क्रन्द दक्षिणतो | २. ४२. ३ |
| अव क्षिप दिवो अश्मान | २. ३०. ५ |
| अव चष्ट ऋचीषमो | ८. ६२. ६ |
| अव ते हेळो वरुण | १. २४. १४ |
| अव त्मना भरते | १. १०४. ३ |
| अव त्या बृहतीरिषो | १०. १३४. ३ |
| अव त्वे इन्द्र प्रवतो | ६. ४७. १४ |
| अवद्यमिव मन्यमाना | ४. १८. ५ |
| अव द्युतानः कलशाँ | ९. ७५. ३ |
| अव द्रप्सो अंशुमती | ८. ९६. १३ |
| अव द्रुग्धानि पित्र्या | ७. ८६. ५ |
| अव द्वके अव त्रिका | १०. ५९. ९ |
| अव नो वृजिना शिशीह्यृचा | १०. १०५. ८ |
| अवन्तमत्रये गृहं | ८. ७३. ७ |
| अवन्तु नः पितरः | १. १०६. ३ |
| अवन्तु मामुषसो जायमाना | ६. ५२. ४ |
| अवपतन्तीरवदन्दिव | १०. ९७. १७ |
| अव यच्छ्येनो अस्वनीदध | ४. २७. ३ |
| अव यत्त्वं शतक्रतविन्द्र | १०. १३४. ४ |
| अव यत्स्वे सधस्थे | ८. ७९. ९ |
| अवर्त्या शुन आन्त्राणि | ४. १८. १३ |
| अवर्धयन्त्सुभगं सप्त | ३. १. ४ |
| अवर्मह इन्द्र दादृहि | १. १३३. ६ |
| अवर्षीर्वर्षमुदु षू गृभाया | ५. ८३. १० |
| अवविद्धं तौग्र्यमप्स्वन्त | १. १८२. ६ |
| अव वेदिं होत्राभिर्यजेत | ७. ६०. ९ |
| अव सिन्धुं वरुणो | ७. ८७. ६ |
| अवसृजन्नुप त्मना | १. १४२. ११ |
| अव सृज पुनरग्ने | १०. १६. ५ |
| अव सृजा वनस्पते | १. १३. ११ |
| अवसृष्टा परा पत | ६. ७५. १६ |
| अव स्पृधि पितरं योधि | ५. ३. ९ |
| अव स्म दुर्हणायतो | १०. १३४. २ |
| अव स्म यस्य वेषणे | ५. ७. ५ |
| अवस्यते स्तुवते | १. ११६. २३ |
| अव स्य शूराध्वनो | ४. १६. २ |
| अव स्यूमेव चिन्वती | ३. ६१. ४ |
| अव स्वयुक्ता दिव आ | १. १६८. ४ |
| अव स्वराति गर्गरो | ८. ६९. ९ |
| अव स्वेदा इवाभितो | १०. १३४. ५ |

| | |
|---|---|
| अवा कल्पेषु नः पुमस्तमांसि | ९. ९. ७ |
| अवाचचक्षं पदमस्य | ५. ३०. २ |
| अवा नु कं ज्यायान् | १०. ५०. ५ |
| अवा नो अग्न ऊतिभि | १. ७९. ७ |
| अवा नो वाजयुं रथं | ८. ८०. ६ |
| अवावशन्त धीतयो वृषभस्याधि | ९. १९. ४ |
| अवासां मघवञ्जहि | १. १३३. ३ |
| अवासृजः प्रस्वः श्वञ्चयो | १०. १३८. २ |
| अवासृजन्त जिव्रयो न | ४. १९. २ |
| अविता नो अजाश्वः | ९. ६७. १० |
| अवितासि सुन्वतो वृक्त | ८. ३६. १ |
| अविदद्दक्षं मित्रो नवीयान् | ६. ४४. ७ |
| अविन्दद्दिवो निहितं गुहा | १. १३०. ३ |
| अविन्दन्ते अतिहितं यदासीद् | १०. १८१. २ |
| अविप्रे चिद्वयो दधदनाशुना | ६. ४५. २ |
| अविप्रो वा यदविधद् | ८. ६१. ९ |
| अविष्टं धीष्वश्विना न | ७. ६७. ६ |
| अवीरामिव मामयं | १०. ८६. ९ |
| अवीवृधद्वो अमृता अमन्दी | ८. ८०. १० |
| अवीवृधन्त गोतमा इन्द्र | ४. ३२. १२ |
| अवेयमश्वैद्युवतिः पुरस्ताद् | १. १२४. ११ |
| अवोचाम कवये मेध्याय | ५. १. १२ |
| अवोचाम नमो अस्मा | १. ११४. ११ |
| अवोचाम निवचनान्यस्मिन् | १. १८९. ८ |
| अवोचाम महते सौभगाय | ८. ५९. ५ |
| अवोचाम रहूगणा अग्नये | १. ७८. ५ |
| अवो द्वाभ्यां पर एकया | १०. ६७. ४ |
| अवोरित्था वां छर्दिषो | ६. ६७. ११ |
| अवोर्वां नूनमश्विना | ७. ६७. ४ |
| अव्ये पुनानं परि वार | ९. ८६. २५ |
| अव्ये वधूयुः पवते परि | ९. ६९. ३ |
| अव्यो वारे परि प्रियं | ९. ५०. ३ |
| अव्यो वारे परि प्रियो | ९. ७. ६ |
| अव्यो वारेभिः पवते | ९. १०१. १६ |
| अशोच्यग्निः समिधानो | ७. ६७. २ |
| अश्नापिनद्धं मधु पर्यपश्यन् | १०. ६८. ८ |
| अश्मन्वती रीयते सं | १०. ५३. ८ |
| अश्मास्यमवतं ब्रह्मण | २. २४. ४ |
| अश्याम तं काममग्ने | ६. ५. ७ |
| अश्याम ते सुमतिं | १. ११४. ३ |
| अश्रवं हि भूरिदावत्तरा | १. १०९. २ |
| अश्रीरा तनूर्भवति | १०. ८५. ३० |
| अश्वं न गीर्भी रथ्यं | ८. १०३. ७ |
| अश्वं न गूळ्हमश्विना | १. ११७. ४ |
| अश्वं न त्वा वारवन्तं | १. २७. १ |
| अश्वत्थे वो निषदनं | १०. ९७. ५ |
| अश्वमिद्गां रथप्रां त्वेष | ८. ७४. १० |
| अश्वस्यात्र जनिमास्य च | २. ३५. ६ |
| अश्वा इवेदरुषासः सबन्धवः | ५. ५९. ५ |
| अश्वादियायेति यद् | १०. ७३. १० |
| अश्वा न या वाजिना | ६. ६७. ४ |
| अश्वायन्तो गव्यन्तो वाजयन्तो | १०. १६०. ५ |
| अश्वावति प्रथमो गोषु | १. ८३. १ |
| अश्वावतीं सोमावतीमूर्जयन्ती | १०. ९७. ७ |
| अश्वावतीर्गोमतीर्न | ७. ४१. ७ |
| | ७. ८०. ३ |
| अश्वावतीर्गोमतीर्विश्ववारा | १. १२३. १२ |
| अश्वावतीर्गोमतीर्विश्वसुविदो | १. ४८. २ |
| अश्वावन्तं रथिनं वीरवन्तं | १०. ४७. ५ |
| अश्वासो न ये ज्येष्ठास | १०. ७८. ५ |
| अश्वासो ये वासुप | ७. ७४. ४ |
| अश्विना परि वामिषः | ३. ५८. ८ |
| अश्विना पिवतं मधु | १. १५. ११ |
| अश्विना पुरुदंससा नरा | १. ३. २ |
| अश्विना मधुमत्तमं पातं | १. ४७. ३ |
| अश्विना मधुपुत्तमो युवाकुः | ३. ५८. ९ |
| अश्विना यज्वरीरिषो द्रवत् | १. ३. १ |
| अश्विना यद्ध कर्हि चिच्छुश्रूयात | ५. ७४. १० |
| अश्विना यामहूतमा नेदिष्ठं | ८. ७३. ६ |
| अश्विना वर्तिरस्मदा | १. ९२. १६ |
| अश्विना वाजिनीवसू जुषेथां | ५. ७८. ३ |
| अश्विना वायुना युवं | ३. ५८. ७ |
| अश्विनावेह० तिरश्चिद् | ५. ७५. ७ |
| अश्विनावेह० हंसाविव | ५. ७८. १ |
| अश्विना सु विचाकशद् | ८. ७३. १७ |
| अश्विना स्वृपे स्तुहि | ८. २६. १० |
| •अश्विना हरिणाविव | ५. ७८. २ |
| अश्विनोरसनं रथमनश्वं | १. १२०. १० |
| अश्वी रथी सुरूप इद् | ८. ४. ९ |
| अश्वेव चित्रारुषी माता | ४. ५२. २ |

| | |
|---|---|
| अश्वो न क्रन्दो वृषभिर्युजानः | ९. ९७. २८ |
| अश्वो न क्रन्दअनिभिः | ३. २६. ३ |
| अश्वो न चक्रदो वृषा | ९. ६४. ३ |
| अश्वो वोळ्हा सुखं रथं | ९. ११२. ४ |
| अश्व्यस्य त्मना रथ्यस्य | ४. ४१. १० |
| अश्व्यो वारो अभवस्तदिन्द्र | १. ३२. १२ |
| अषाळ्हं युत्सु पृतनासु | १. ९१. २१ |
| अषाळ्हमुग्रं पृतनासु | ८. ७०. ४ |
| अषाळ्हो अग्ने वृषभो | ३. १५. ४ |
| अष्टा महो दिव आदो | १. १२१. ८ |
| अष्टौ पुत्रासो अदितेर्ये | १०. ७२. ८ |
| अष्टौ व्यख्यत्ककुभः | १. ३५. ८ |
| असंमृष्टो जायसे मात्रोः | ५. ११. ३ |
| असच्च सच्च परमे व्योमन् | १०. ५. ७ |
| असत्सु मे जरितः साभिवेगो | १०. २७. १ |
| असदत्र सुवीर्यमुत | ८. ३१. १८ |
| असन्नित्त्वे आहवनानि | ७. ८. ५ |
| असपत्नः सपत्नहाभि | १०. १७४. ५ |
| असपत्ना सपत्नघ्नी जयन्त्यभि | १०. १५९. ५ |
| असमं क्षत्रमसमा मनीषा | १. ५४. ८ |
| असमातिं नितोशनं त्वेषं | १०. ६०. २ |
| असर्जि कलशाँ अभि | ९. १०६. १२ |
| असर्जि रथ्यो यथा पवित्रे | ९. ३६. १ |
| असर्जि वक्वा रथ्ये यथाजौ | ९. ९१. १ |
| असर्जि वां स्थविरा वेधसा | १. १८१. ७ |
| असर्जि वाजी तिरः पवित्र | ९. १०९. १० |
| असर्जि स्कम्भो दिव उद्यतो | ९. ८६. ४६ |
| असश्चतः शतधारा अभि | ९. ८६. २७ |
| असश्चता मघवद्भ्यो हि | ७. ६७. ९ |
| असश्चन्ती भूरिधारे पयस्वती | ६. ७०. २ |
| असादि वृतो वह्निराजगन् | ७. ७. ५ |
| असाम यथा सुषखाय | १. १७३. ९ |
| असामि हि प्रयज्यवः | १. ३९. ९ |
| असाम्योजो बिभृथा | १. ३९. १० |
| असावन्यो असुर सूयत | १०. १३२. ४ |
| असावि ते जुजुषाणाय | ५. ४३. ५ |
| असावि देवं गोऋजीकमन्धो | ७. २१. १ |
| असावि सोमः पुरुहूत | १०. १०४. १ |
| असावि सोम इन्द्र ते | १. ८४. १ |
| असावि सोमो अरुषो | ९. ८२. १ |
| असाव्यंशुर्मदायाप्सु | ९. ६२. ४ |
| असिक्न्यां यजमानो न | ४. १७. १५ |
| असि यमो अस्यादित्यो | १. १६३. ३ |
| असि हि वीर सेन्योऽसि | १. ८१. २ |
| असुनीते पुनरस्मासु | १०. ५९. ६ |
| असुनीते मनो अस्मासु | १०. ५९. ५ |
| असुन्वन्तं समं जहि | १. १७६. ४ |
| असुन्वामिन्द्र संसदं | ८. १४. १५ |
| असूत पूर्वो वृषभो | ३. ३८. ५ |
| असूत पृश्निर्महते रणाय | १. १६८. ९ |
| असृक्षत प्र वाजिनो | ९. ६४. ४ |
| असृग्रन्देववीतयेऽत्यासः | ९. ४६. १ |
| असृग्रन्देववीतये वाजयन्तो | ९. ६७. १७ |
| असृग्रमिन्दवः पथा | ९. ७. १ |
| असृग्रमिन्द्र ते गिरः | १. ९. ४ |
| असेन्या वः पणयो | १०. १०८. ६ |
| असौ च या न उर्वरा | ८. ९१. ६ |
| असौ यः पन्था आदित्यो | १. १०५. १६ |
| असौ य एषि वीरको | ८. ९१. २ |
| अस्तभ्नाद्द्यामसुरो विश्ववेदा | ८. ४२. १ |
| अस्तावि मन्म पूर्व्यं | ८. ५२. ९ |
| अस्तान्यग्निः शिमीवद्भिरर्कैः | १. १४१. १३ |
| अस्ताव्यग्निर्नरां सुशेवो | १०. ४५. १२ |
| अस्ति देवा अंहोरुर्वस्ति | ८. ६७. ७ |
| अस्ति सोमो अयं सुतः | ८. ९४. ४ |
| अस्ति हि वः सजात्यं | ८. २७. १० |
| अस्ति हि वामिह स्तोता | ५. ७४. ६ |
| अस्ति हि ष्मा मदाय | १. ३७. १५ |
| अस्तीदमधिमन्थनमस्ति | ३. २९. १ |
| अस्तु श्रौषट् पुरो अग्निं | १. १३९. १ |
| अस्तेव सु प्रतरं लायमस्य | १०. ४२. १ |
| अस्तोढ्वं स्तोम्या ब्रह्मणा | १. १२४. १३ |
| अस्थुरु चित्रा उषसः | ४. ५१. २ |
| अस्मभ्यं गातुवित्तमो | ९. १०६. ६ |
| अस्मभ्यं तद्दिवो अद्भ्यः | २. ३८. ११ |
| अस्मभ्यं तद्वसो दानाय | २. १३. १३ |
| | २. १४. १२ |
| अस्मभ्यं ताँ अपा वृधि | ४. ३१. १३ |
| अस्मभ्यं त्वा वसुविदमभि | ९. १०४. ४ |
| अस्मभ्यं रोदसी रयिं | ९. ७. ९ |

| | |
|---|---|
| अस्मभ्यं वाजिनीवसू | ८. ५. १२ |
| अस्मभ्यं सु त्वमिन्द्र | १०. १३३. ७ |
| अस्मभ्यं सु वृषण्वसू | ८. २६. १५ |
| अस्मभ्यमिन्दविन्द्रयुर्मध्वः | ९. २. ९ |
| अस्माँ अवन्तु ते शत | ४. ३१. १० |
| अस्माँ अविड्ढि विश्वहेन्द्र | ४. ३१. १२ |
| अस्माँ इहा वृणीष्व | ४. ३१. ११ |
| अस्माअस्मा इदन्धसो | ६. ४२. ४ |
| अस्मा इत्काव्यं वच | ५. ३९. ५ |
| अस्मा इदु ग्नाश्चिद्देवपत्नीः | १. ६१. ८ |
| अस्मा इदु त्यदनु | १. ६१. १५ |
| अस्मा इदु त्यमुपमं | १. ६१. ३ |
| अस्मा इदु त्वष्टा | १. ६१. ६ |
| अस्मा इदु प्र तवसे | १. ६१. १ |
| अस्मा इदु प्र भरा | १. ६१. १२ |
| अस्मा इदु प्रय इव | १. ६१. २ |
| अस्मा इदु सप्तिमिव | १. ६१. ५ |
| अस्मा इदु स्तोमं सं | १. ६१. ४ |
| अस्मा उक्थाय पर्वतस्य | ५. ४५. ३ |
| अस्मा उ ते महि महे | ६. १. १० |
| अस्मा उपास आतिरन्त | ८. ९६. १ |
| अस्मा ऊ षु प्रभूतये | ८. ४१. १ |
| अस्मा एतद्दिव्यर्चेव | ६. ३४. ४ |
| अस्मा एतन्मह्याङ्गूषमस्मा | ६. ३४. ५ |
| अस्माकं जोष्यध्वरमस्माकं | ४. ९. ७ |
| अस्माकं त्वा मतीनामा | ४. ३२. १५ |
| अस्माकं त्वा सुताँ उप | ८. ६. ४२ |
| अस्माकं देवा उभयाय | १०. ३७. ११ |
| अस्माकं धृष्णुया रथो | ४. ३१. १४ |
| अस्माकं मित्रावरुणावतं | २. ३१. १ |
| अस्माकं व इन्द्रमुश्मसीष्टये | १. १२९. ४ |
| अस्माकं शिप्रिणीनां सोमपाः | १. ३०. ११ |
| अस्माकं सु रथं पुर | ८. ४५. ९ |
| अस्माकमग्ने अध्वरं | ५. ४. ८ |
| अस्माकमग्ने मघवत्सु दीदिह्यध | १. १४०. १० |
| अस्माकमग्ने मघवत्सु धारया | ६. ८. ६ |
| अस्माकमत्र पितरस्त | ४. ४२. ८ |
| अस्माकमत्र पितरो मनुष्या | ४. १. १३ |
| अस्माकमद्य वामयं | ८. ५. १८ |
| अस्माकमद्यान्तमं स्तोमं | ८. ३३. १५ |
| अस्माकमायुर्वर्धयन् | ३. ६२. १५ |
| अस्माकमित्सु शृणुहि | ४. २२. १० |
| अस्माकमिन्द्रः समृतेषु | १०. १०३. ११ |
| अस्माकमिन्द्र दुष्टरं | ५. ३५. ७ |
| अस्माकमिन्द्र भूतु ते | ६. ४५. ३० |
| अस्माकमिन्द्रावरुणा | ७. ८२. ९ |
| अस्माकमिन्द्रेहि नो | ५. ३५. ८ |
| अस्माकमुत्तमं कृधि | ४. ३१. १५ |
| अस्माकमूर्जा रथं | १०. २६. ९ |
| अस्माकेभिः सत्वभिः शूर | २. ३०. १० |
| अस्मादहं तविषादीषमाण | १. १७१. ४ |
| अस्मान्त्समर्ये पवमान | ९. ८५. २ |
| अस्मान्त्सु तत्र चोदयेन्द्र | १. ९. ६ |
| अस्मिन्त्समुद्रे अध्युत्तर | १०. ९८. ६ |
| अस्मिन्त्स्वेतच्छकपूत एनो | १०. १३२. ५ |
| अस्मिन्न इन्द्र पृत्सुतौ | १०. ३८. १ |
| अस्मिन्पदे परमे तस्थिवांस | २. ३५. १४ |
| अस्मिन्यज्ञे अदाभ्या | ५. ७५. ८ |
| अस्मे आ वहतं रयिं | ८. ५. १५ |
| अस्मे इन्द्र सचा सुते | ८. ९७. ८ |
| अस्मे इन्द्राबृहस्पती | ४. ४९. ४ |
| अस्मे इन्द्रावरुणा विश्ववारं | ७. ८४. ४ |
| अस्मे इन्द्रो वरुणो मित्रो | ७. ८२. १० |
| | ७. ८३. १० |
| अस्मे ऊ षु वृषणा | १. १८४. २ |
| अस्मे तदिन्द्रावरुणा | ३. ६२. ३ |
| अस्मे ता त इन्द्र सन्तु | १०. २२. १३ |
| अस्मे धेहि द्युमतीं | १०. ९८. ३ |
| अस्मे धेहि द्युमद्यशो | ९. ३२. ६ |
| अस्मे धेहि श्रवो बृहद् | १. ९. ८ |
| अस्मे प्र यन्धि मघवन् | ३. ३६. १० |
| अस्मे रयिं न स्वर्थं | १. १४१. ११ |
| अस्मे रायो दिवेदिवे | ४. ८. ७ |
| अस्मे रुद्रा मेहना | ८. ६३. १२ |
| अस्मे वत्सं परि षन्तं | १. ७२. २ |
| अस्मे वर्षिष्ठा कृणुहि | ४. २२. ९ |
| अस्मे वसूनि धारय | ९. ६३. ३० |
| अस्मे वीरो मरुतः | ७. ५६. २४ |
| अस्मे श्रेष्ठेभिर्भानुभिर्वि | ७. ७७. ५ |
| अस्मे सा वां माध्वी | १. १८४. ४ |

अहं राजा वरुणो मह्यं ४. ४२.
अहं राष्ट्री संगमनी १०. १२५. ३
अहं रुद्राय धनुरा १०. १२५. ६
अहं रुद्रेभिर्वसुभि १०. १२५. १
अहं सप्त स्रवतो धारयं १०. ४९. ९
अहं सप्तहा नहुषो नहुष्टरः १०. ४९. ८
अहं स यो नववास्त्वं १०. ४९. ६
अहं सुवे पितरमस्य १०. १२५. ७
अहं सूर्यस्य परि याम्याशुभिः १०. ४९. ७
अहं सो अस्मि यः १. १०५. ७
अहं सोममाहनसं १०. १२५. २
अहं हि ते हरिवो ब्रह्म ८. ५३. ८
अहं हुवान आर्क्षे श्रुतर्वणि ८. ७४. १३
अहं होता न्यसीदं १०. ५२. २
अहन्नहिं परिशयानमर्ण ३. ३२. ११
अहन्नहिं पर्वते शिश्रियाणं १. ३२. २
अहन्निन्द्रो अदहदग्निरिन्दो ४. २८. ३
अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रं १. ३२. ५
अहन्वृत्रमृचीषम ८. ३२. २६
अहमत्कं कवये शिश्नथं १०. ४९. ३
अहमपो अपिन्वमुक्षमाणा ४. ४२. ४
अहमस्मि महामहोऽभि १०. ११९. १२
अहमस्मि सपत्नहेन्द्र १०. १६६. २
अहमस्मि सहमानाथ १०. १४५. ५
अहमिद्धि पितुष्परि ८. ६. १०
अहमिन्द्रो न परा जिग्य १०. ४८. ५
अहमिन्द्रो रोधो वक्षो १०. ४८. २
अहमिन्द्रो वरुणस्ते ४. ४२. ३
अहमेनं गव्ययमश्व्यं १०. ४८. ४
अहमेताञ्छाश्वसतो १०. ४८. ६
अहमेव वात इव प्र १०. १२५. ८
अहमेव स्वयमिदं वदामि १०. १२५. ५
अहश्च कृष्णमहरर्जुनं च ६. ९. १
अहस्ता यदपदी वर्धत १०. २२. १४
अहानि गृध्राः पर्या व १. ८८. ४
अहा यदिन्द्र सुदिना ७. ३०. ३
अहाव्यग्ने हविरास्ये ते १०. ९१. १५
अहितेन चिदर्वता जीरदानुः ८. ६२. ३
अहिरिव भोगैः पर्येति ६. ७५. १४
अहेळता मनसा श्रुष्टिमा २. ३२. ३

अहेळमान उप याहि ६. ४१. १
अहेम यज्ञं पथामुराणा ७. ७३. ३
अहेर्यातारं कमपश्य १. ३२. १४
आकरे वसोर्जरिता ३. ५१. ३
आ कलशा अनूषतेन्दो ९. ६५. १४
आ कलशेषु धावति पवित्रे ९. १७. ४
आ कलशेषु धावति श्येनो ९. ६७. १४
आकीं सूर्यस्य रोचनाद् १. १४. ९
आ कृष्णेन रजसा वर्तमानो १. ३५. २
आकेनिपासो अहभि ४. ४५. ६
आ क्रन्दय बलमोजो ६. ४७. ३०
आक्षित्पूर्वास्वपरा अनूरु ३. ५५. ५
आ क्षोदो महि वृतं ६. १७. १२
आक्ष्णयावानो वहन्त्यन्तरिक्षेण ८. ७. ३५
आगधिता परिगधिता १. १२६. ६
आ गन्ता मा रिषण्यत ८. २०. १
आगन्देव ऋतुभिर्वर्धतु ४. ५३. ७
आगन्नृभूणामिह रत्नधेय ४. ३५. २
आगन्म वृत्रहन्तमं ८. ७४. ४
आ गावो अग्मन्नुत ६. २८. १
आ गोमता नासत्या ७. ७२. १
आ ग्ना अग्न इहावसे १. २२. १०
आग्निं न स्ववृक्तिभिर्होतारं १०. २१. १
आग्निरगामि भारतो ६. १६. १९
आग्ने गिरो दिव आ ७. ३९. ५
आग्ने याहि मरुत्सखा ८. १०३. १४
आग्ने वह वरुणमिष्टये १०. ७०. ११
आग्ने वह हविरद्याय ७. ११. ५
आग्ने स्थूरं रयिं भर १०. १५६. ३
आग्मन्नाप उशतीर्बर्हिरेदं १०. ३०. १५
आ ग्रावभिरहन्येभि ५. ४८. ३
आ घ त्वावान्त्मनाप्तः १. ३०. १४
आ घा गमद्यदि श्रवत् १. ३०. ८
आ घा ता गच्छानुत्तरा १०. १०. १०
आ घा ये अग्निमिन्धते ८. ४५. १
आ घा योषेव सूनर्युषा १. ४८. ५
आ च त्वामेता वृषणा ३. ४३. ४
आ चन त्वा चिकित्सामो ८. ९१. ३
आ च नो बर्हिः सदताविता ७. ५९. ६
आ चर्षणिप्रा वृषभो १. १७७. १

| | |
|---|---|
| आ याहि पूर्वीरति | ३. ४३. २ |
| आ याहि वनसा सह | १०. १७२. १ |
| आ याहि शश्वदुशता | ६. ४०. ४ |
| आ याहि सुपुमा हि त | ८. १७. १ |
| आ याहीम इन्दवो | ८. २१. ३ |
| आ याह्यग्ने पथ्या अनु | ७. ७. २ |
| आ याह्यग्ने समिधानो | ३. ४. ११ |
| | ७. २. ११ |
| आ याह्यद्रिभिः सुतं | ५. ४०. १ |
| आ याह्यर्य आ परि | ८. ३४. १० |
| आ याह्यर्वाङुप | ३. ४३. १ |
| आयुर्विश्वायुः परि | १०. १७. ४ |
| आ युवानः कवयो | ६. ४९. ११ |
| आ यूथेव क्षुमति पश्वो | ४. २. १८ |
| आ ये तन्वन्ति रश्मिभिस्तिरः | १. १९. ८ |
| आ ये तस्थुः पृषतीषु | ५. ६०. २ |
| आ ये रजांसि तविषीभि | १. १६६. ४ |
| आ ये विश्वा पार्थिवानि | ८. ९४. ९ |
| आ ये विश्वा स्वपत्यानि | १. ७२. ९ |
| आ यो गोभिः सृज्यत | ९. ८४. ३ |
| आ योनिमग्निर्घृतवन्त | ३. ५. ७ |
| आ योनिमरुणो रुहद् | ९. ४०. २ |
| आ यो मूर्धानं पित्रोररब्ध | १०. ८. ३ |
| आ यो योनिं देवकृतं | ७. ४. ५ |
| आ यो वना तातृषाणो | २. ४. ६ |
| आ यो विवाय सचथाय | १. १५६. ५ |
| आ यो विश्वानि वार्या | ९. १८. ४ |
| आरङ्गरेव मध्वेरयेथे | १०. १०६. १० |
| आ रयिमा सुचेतुनमा | ९. ६५. ३० |
| आराच्छत्रुमप बाधस्व | १०. ४२. ७ |
| आ राजाना मह ऋतस्य | ७. ६४. २ |
| आ रिख किकिरा कृणु | ६. ५३. ७ |
| आ रुक्मैरा युधा नर | ५. ५२. ६ |
| आ रुद्रास इन्द्रवन्तः | ५. ५७. १ |
| आरे अघा को न्वित्था | १०. १०२. १० |
| आरे अस्मदमतिमारे | ४. ११. ६ |
| आरे ते गोघ्नमुत | १. ११४. १० |
| आरे सा वः सुदानवो | १. १७२. २ |
| आरोका इव घेदह | ८. ४३. ३ |
| आ रोदसी अपृणदा | ३. २. ७ |
| आ रोदसी अपृणा जायमान | २. ६. २ |
| आ रोदसी अपृणादोत | १०. ५५. ३ |
| आ रोदसी बृहती | १. ७२. ४ |
| आ रोदसी हर्यमाणो | १०. ९६. ११ |
| आ रोहतायुर्जरसं | १०. १८. ६ |
| आर्चन्नत्र मरुतः सस्मिन् | १. ५२. १५ |
| आर्ष्टिषेणो होत्रमृषि | १०. ९८. ५ |
| आलाक्ता या रुरुशीर्ष्ण्यथो | ६. ७५. १५ |
| आ वंसते मघवा वीरवद् | ८. १०३. ९ |
| आवः कुत्समिन्द्र | १. ३३. १४ |
| आवः शमं वृषभं | १. ३३. १५ |
| आ व इन्द्रं क्रिविं यथा | १. ३०. १ |
| भा व ऋञ्जस ऊर्जां | १०. ७६. १ |
| आ वक्षि देवाँ इह | २. ३६. ४ |
| आ वच्यस्व महि प्सरो | ९. २. २ |
| आ वच्यस्व सुदक्ष चम्वोः | ९. १०८. १० |
| आवदंस्त्वं शकुने भद्रमा | २. ४३. ३ |
| आवदिन्द्रं यमुना तृत्सवश्च | ७. १८. १९ |
| आवर्वृततीरध नु | १०. ३०. १० |
| आवहन्ती पोष्या वार्याणि | १. ११३. १५ |
| आवहन्त्यरुणीर्ज्योतिषा | ४. १४. ३ |
| आ वहेथे पराकात् | ८. ५. ३१ |
| आ वां ग्रावाणो अश्विना | ८. ४२. ४ |
| आ वां दानाय ववृतीय | १. १८०. ५ |
| आ वां धियां ववृत्यु | १. १३५. ५ |
| आ वां नरा मनोयुजो | ५. ७५. ६ |
| आ वां भूषन्क्षितयो | १. १५१. ३ |
| आ वां मित्रावरुणा | १. १५२. ७ |
| आ वां येष्ठाश्विना | ५. ४१. ३ |
| आ वां रथं दुहिता | १. ११६. १७ |
| आ वां रथं पुरुमायं | १. ११९. १ |
| आ वां रथं युवति | १. ११८. ५ |
| आ वां रथमवमस्यां | ७. ७१. ३ |
| आ वां रथो अश्विना | १. ११८. १ |
| आ वां रथो नियुत्वान् | १. १३५. ४ |
| आ वां रथो रथानां | ५. ७४. ८ |
| आ वां रथो रोदसी | ७. ६९. १ |
| आ वां रथोऽवनिर्न | १. १८१. ३ |
| आ वां राजानावध्वरे | ७. ८४. १ |
| आ वां वयोऽश्वासो | ६. ६३. ७ |

| | |
|---|---|
| आस्थापयन्त युवतिं | १. १६७. ६ |
| आस्नो वृकस्य वर्तिका | १. ११६. १४ |
| आ स्मा रथं वृषपाणेषु | १. ५१. १२ |
| आस्मिन्पिशङ्गमिन्दवो | ९. २१. ५ |
| आ स्वमद्म युवमानो | १ ५८. २ |
| आहं पितृन्त्सुविदत्राँ | १०. १५. ३ |
| आहं सरस्वतीवतो | ८. ३८. १० |
| आ हरयः ससृज्रिरे | ८. ६९. ५ |
| आ हर्यताय धृष्णवे | ९. ९९. १ |
| आ हर्यतो अर्जुने | ९. १०७. १३ |
| आहार्षं त्वाविदं त्वा | १०. १६१. ५ |
| आ हि द्यावापृथिवी | १०. १. ७ |
| आ हि रुहतमश्विना | ८. २२. ९ |
| आ हि ष्मा याति नर्यं | ४. २९. २ |
| आ हि ष्मा सूनवे पिता | १. २६. ३ |
| आ होता मन्द्रो विदथा | ३. १४. १ |
| इच्छन्ति त्वा सोम्यासः | ३. ३०. १ |
| इच्छन्ति देवाः सुन्वन्तं | ८. २. १८ |
| इच्छन्नश्वस्य यच्छिरः | १. ८४. १४ |
| इळामग्ने पुरुदंसं सनिं | ३. १. २३ |
| | ३. ५. ११ |
| | ३. ६. ११ |
| | ३. ७. ११ |
| | ३. १५. ७ |
| | ३. २२. ५ |
| | ३. २३. ५ |
| इळायास्त्वा पदे वयं | ३. २९. ४ |
| इळा सरस्वती मही | १. १३. ९ |
| | ५. ५. ८ |
| इत ऊती वो अजरं | ८. ९९. ७ |
| इति चिद्धि त्वा धना | १०. १२०. ४ |
| इति चिन्नु प्रजायै | ५. ४१. १७ |
| इति चिन्मन्युमध्रिज | ५. ७. १० |
| इति त्वाग्ने वृष्टिहव्यस्य | १०. ११५. ९ |
| इति त्वा देवा इम | १०. ९५. १८ |
| इति वा इति मे मनो | १०. ११९. १ |
| इति स्तुतासो असथा | ८. ३०. २ |
| इतो वा सातिमीमहे | १. ६. १० |
| इत्था धीवन्तमद्रिवः | ८. २. ४० |
| इत्था यथा त ऊतये | ५. २०. ४ |
| इत्था हि सोम इन्मदे | १. ८०. १ |
| इदं कवेरादित्यस्य | २. २८. १ |
| इदं त एकं पर ऊ त | १०. ५६. १ |
| इदं ते पात्रं सनवित्तमिन्द्र | १०. ११२. ६ |
| इदं ते सोम्यं मध्वधुक्षन् | ८. ६५. ८ |
| इदं त्यत्पात्रमिन्द्रपान | ६. ४४. १६ |
| इदं द्यावापृथिवी सत्यमस्तु | १. १८५. ११ |
| इदं नमो वृषभाय स्वराजे | १. ५१. १५ |
| इदं पितृभ्यो नमो अस्त्वद्य | १०. १५. २ |
| इदं पित्रे मरुतामुच्यते | १. ११४. ६ |
| इदं मे अग्ने कियते | ४. ५. ६ |
| इदं यमस्य सादनं | १०. १३५. ७ |
| इदं वचः पर्जन्याय | ७. १०१. ५ |
| इदं वचः शतसाः | ७. ८. ६ |
| इदं वपुर्निवचनं | ५. ४७ ५ |
| इदं वसो सुतमन्धः | ८. २. १ |
| इदं वां मदिरं मध्वधुक्षन् | ८. ३८. ३ |
| इदं वामास्ये हविः | ४. ४९. १ |
| इदं विष्णुर्वि चक्रमे | १. २२. १७ |
| इदं श्रेष्ठं० ज्योतिरागाच्चित्रः | १. ११३. १ |
| इदं श्रेष्ठं० ज्योतिरुत्तमं | १०. १७०. ३ |
| इदं सु मे जरितरा | १०. २८. ४ |
| इदं स्वरिदमिदास | १०. १२४. ६ |
| इदं ह नूनमेषां सुम्नं | ८. १८. १ |
| इदं हविर्मघवन्तुभ्यं | १०. ११६. ७ |
| इदं हि वां प्रदिवि | ५. ७६. ४ |
| इदं ह्यन्वोजसा सुतं | ३. ५१. १० |
| इदमकर्म नमो अभ्रियाय | १०. ६८. १२ |
| इदमग्ने सुधितं दुर्धिता | १. १४०. ११ |
| इदमापः प्र वहत | १. २३. २२ |
| | १०. ९. ८ |
| इदमित्था रौद्रं गूर्तवचा | १०. ६१. १ |
| इदमु त्यत्पुरुतमं | ४. ५१. १ |
| इदमु त्यन्महि महामनीकं | ४. ५. ९ |
| इदमुदकं पिबतेत्यब्रवीतनेदं | १. १६१. ८ |
| इदा हि त उपो अद्रिसानो | ६. ६५. ५ |
| इदा हि ते वेविषतः | ६. २१. ५ |
| इदा हि व उपस्तुतिमिदा | ८. २७. ११ |
| इदा हि वो विधते | ६. ६५. ४ |
| इदाह्नः पीतिमुत वो | ४. ३३. ११ |

